# श्रीषोडशीसहस्रनामस्तोत्रम्

॥ श्रीमहात्रिपुरसुन्दर्यै नमः॥

## ॥ पूर्व पीठिका ॥

कैलासशिखरे रम्ये नानारत्नोपशोभिते।
कल्पपादपमध्यस्थे नानापुष्पोपशोभिते ॥ १॥

मणिमण्डपमध्यस्थे मुनिगन्धर्वसेविते ।
कदाचित्सुखमासीनं भगवन्तं जगद्गुरुम् ॥ २॥

कपालखट्वाङ्गधरं चन्द्रार्धकृतशेखरम् ।
हस्तत्रिशूलडमरुं महावृषभवहनम् ॥ ३॥

जटाजूटधरन्देवं कण्ठभूषणवासुकिम् ।
विभूतिभूषणन्देवं नीलकण्ठन्त्रिलोचनम् ॥ ४॥

द्वीपिचर्मपरीधानं शुद्धस्फटिकसन्निभम् ।
सहस्रादित्यसङ्काशं गिरिजार्द्धाङ्गभूषणम् ॥ ५॥

प्रणम्य शिरसा नाथं कारणं विश्वरूपिणम् ।
कृताञ्जलि पुटो भूत्वा प्राहैनं शिखवाहनः ॥ ६॥

## ॥ कार्तिकेय उवाच ॥

देवदेव जगन्नाथ!  सृष्टिस्थितिलयात्मक ।
त्वमेव परमात्मा च त्वं गतिः सर्वदेहिनाम् ॥ ७॥

त्वङ्गतिः सर्वलोकानां दीनानां च त्वमेव हि ।
त्वमेव जगदाधारस्त्वमेव विश्वकारणम् ॥ ८॥

त्वमेव पूज्यः सर्वेषां त्वदन्यो नास्ति मे गतिः ।
किं गुह्यम्परमं लोके किमेकं सर्वसिद्धिदम् ॥ ९॥

किमेकं परमं श्रेष्ठं को योग: स्वर्गमोक्षद: ।
विना तीर्थेन तपसा विना दानैर्विना मखै: ॥ १०॥

विना लयेन ध्यानेन नरः सिद्धिमवाप्नुयात् ।
कस्मादुत्पद्यते सृष्टिः कस्मिंश्च प्रलयो भवेत् ॥ ११॥

कस्मादुत्तीर्यते देव ! संसारार्णवसङ्कटात् ।
तदहं श्रोतुमिच्छामि कथयस्व महेश्वर ! ॥ १२॥

॥ ईश्वर उवाच ॥

साधु साधु त्वया पृष्टं पार्वतीप्रियनन्दन ।
अस्ति गुह्यतमम्पुत्र! कथयिष्याम्यसंशयम् ॥ १३॥

सत्वं रजस्तमश्चैव ये चान्ये महदादयः ।
ये चान्ये बहवो भूताः सर्वे प्रकृतिसम्भवाः ॥ १४॥

सैव देवी पराशक्तिः महात्रिपुरसुन्दरी ।
सैव प्रसूयते विश्वं विश्वं सैव प्रपास्यति ॥ १५॥

सैव संहरते विश्वं जगदेतच्चराचरम् ।
आधारः सर्वभूतानां सैव रोगार्तिहारिणी ॥ १६॥

इच्छाज्ञानक्रियाशक्तिरब्रह्मविष्णुशिवात्मिका ।
त्रिधा शक्तिस्वरूपेण सृष्टिस्थितिविनाशिनी ॥ १७॥

सृज्यते ब्रह्मरूपेण विष्णुरूपेण पाल्यते ।
ह्रियते रुद्ररूपेण जगदेतच्चराचरम् ॥ १८॥

यस्या योनौ जगत्सर्वमद्यापि परिवर्तते ।
यस्यां प्रलीयते चान्ते यस्यां च जायते पुनः ॥ १९॥

यां समाराध्य त्रैलोक्ये सम्प्राप्यं पदमुत्तमम् ।
तस्या नामसहस्रं तु कथयामि शृणुष्व तत् ॥ २०॥

॥ विनियोगः ॥

ॐ अस्य श्रीमहात्रिपुरसुन्दरीसहस्रनामस्तोत्रमन्त्रस्य श्रीभगवान् दक्षिणामूर्तिः ऋषिः । जगतीछन्दः । समस्तप्रकटगुप्तसम्प्रदाय कुलकौलोत्तीर्णनिर्गर्भरहस्याचिन्त्यप्रभावती देवता । ॐ बीजं । ह्रीं शक्तिः । क्लीं कीलकं ।

धर्मार्थकाममोक्षार्थे जपे विनियोगः ।pAThe

॥ ऋष्यादि न्यासः ॥

ॐ श्रीमहात्रिपुरसुन्दरीसहस्रनामस्तोत्रमन्त्रस्य
श्रीभगवान् दक्षिणामूर्ति ऋषये नमः शिरसि ।
ॐ जगतीच्छन्दसे नमः मुखे।
ॐसमस्तप्रकटगुप्तसम्प्रदायकुलकौलोत्तीर्णनिर्गर्भरहस्याचिन्त्यप्रभावतीदेवतायै नमः हृदये ।
ॐ ॐ बीजाय नमः नाभौ ।var वीजाय
ॐ ह्रीं शक्त्ये नमः गुह्ये ।
ॐ क्लीं कीलकाय नमः पादयोः ।
ॐ धर्मार्थकाममोक्षार्थे जपे विनियोगाय नमः सर्वाङ्गे ।pAThe

॥ ध्यानम् ॥

ॐ आधारे तरुणार्कबिम्बरुचिरं हेमप्रभं वाग्भवम् ।
बीजं मन्मथमिन्द्रगोपसदृशं हृत्पङ्कजे संस्थितम् ॥

विष्णुब्रह्मपदस्थशक्तिकलितं सोमप्रभाभासुरम् ।
ये ध्यायन्ति पदत्रयं तव शिवे ! ते यान्ति सौख्यं पदम् ॥

॥ मानस पूजनम् ॥

ॐ लं पृथिव्यात्मकं गन्धं
परब्रह्मस्वरूपिणी श्रीषोडशीदेवी प्रीतये समर्पयामि नमः ।
ॐ हं आकाशतत्त्वात्मकं पुष्पं
परब्रह्मस्वरूपिणी श्रीषोडशीदेवी प्रीतये समर्पयामि नमः ।
ॐ यं वायुतत्त्वात्मकं धूपं
परब्रह्मस्वरूपिणी श्रीषोडशीदेवी प्रीतये घ्रापयामि नमः ।
ॐ रं अग्नितत्त्वात्मकं दीपं
परब्रह्मस्वरूपिणी श्रीषोडशीदेवी प्रीतये दर्शयामि नमः ।
ॐ वं जलतत्त्वात्मकं नैवेद्यं
परब्रह्मस्वरूपिणी श्रीषोडशीदेवी प्रीतये निवेदयामि नमः ।
ॐ सं सर्वतत्त्वात्मकं ताम्बूलं
परब्रह्मस्वरूपिणी श्रीषोडशीदेवी प्रीतये समर्पयामि नमः ।

॥ मूलपाठः ॥

कल्याणी कमला काली कराली कामरूपिणि ।
कामाख्या कामदा काम्या कामना कामचारिणी ॥ १॥

कालरात्रिर्महारात्रि  कपाली कामरूपिणी ।var कालरात्रिः महारात्रिः
कौमारी करुणा मुक्तिः कलिकल्मषनाशिनी ॥ २॥

कात्यायनी कराधारा कौमुदी कमलप्रिया ।
किर्तिदा बुद्धिदा मेधा नीतिज्ञा नीतिवत्सला ॥ ३॥

माहेश्वरी महामाया महातेजा महेश्वरी ।
महाजिह्वा महाघोरा महादंष्ट्रा महाभुजा ॥ ४॥

महामोहान्धकारघ्नी महामोक्षप्रदायिनी ।
महादारिद्र्यनाशा च महाशत्रुविमर्दिनी ॥ ५॥

महामाया महावीर्या महापातकनाशिनी ।
महामखा मन्त्रमयी मणिपूरकवासिनी ॥ ६॥

मानसी मानदा मान्या मनश्चक्षूरणेचरा ।
गणमाता च गायत्री गणगन्धर्वसेविता ॥ ७॥

गिरिजा गिरिशा साध्वी गिरिस्था गिरिवल्लभा ।
चण्डेश्वरी चण्डरूपा प्रचण्डा चण्डमालिनी ॥ ८॥

चर्विका चर्चिकाकारा चण्डिका चारुरूपिणी ।
यज्ञेश्वरी यज्ञरूपा जपयज्ञपरायणा ॥ ९॥

यज्ञमाता यज्ञभोक्त्री यज्ञेशी यज्ञसम्भवा ।
सिद्धयज्ञा क्रियासिद्धिर्यज्ञाङ्गी यज्ञरक्षिका ॥ १०॥

यज्ञक्रिया च यज्ञा च यज्ञायज्ञक्रियालया ।
जालन्धरी जगन्माता जातवेदा जगत्प्रिया ॥ ११॥

जितेन्द्रिया जितक्रोधा जननी जन्मदायिनी ।
गङ्गा गोदावरी चैव गोमती च शतद्रुका ॥ १२॥

घर्घरा वेदगर्भा च रेचिका समवासिनी ।

सिन्धुर्मन्दाकिनी क्षिप्रा यमुना च सरस्वती ॥ १३॥

भद्रा रागा विपाशा च गण्डकी विन्धयवासिनी । var भद्रा १००
नर्मदा ताप्ती कावेरी वेत्रवती सुकौशिकी ॥ १४॥varवेत्रवत्या
महेन्द्रतनया चैव अहल्या चर्मकावती ।
अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ॥ १५॥

पुरी द्वारावती तीर्था महाकिल्विषनाशिनी ।
पद्मिनी पद्ममध्यस्था पद्मकिञ्जल्कवासिनी ॥ १६॥

पद्मवक्त्रा चकोराक्षी पद्मस्था पद्मसम्भवा ।
ह्रीङ्कारी कुण्डलाधारा हृत्पद्मस्था सुलोचना ॥ १७॥

श्रीङ्कारी भूषणा लक्ष्मीः क्लीङ्कारी क्लेशनाशिनी ।
हरिवक्त्रोद्भवा शान्ता हरिवक्त्रकृतालया ॥ १८॥

हरिवक्त्रोपमा हाला हरिवक्षःस्थलास्थिता ।
वैष्णवी विष्णुरूपा च विष्णुमातृस्वरूपिणी ॥ १९॥

विष्णुमाया विशालाक्षी विशालनयनोज्ज्वला ।
विंश्वेश्वरी च विश्वात्मा विश्वेशी विश्वरूपिणी ॥ २०॥

विश्वनाथा शिवाराध्या शिवनाथा शिवप्रिया ।
शिवमाता शिवाख्या च शिवदा शिवरूपिणी ॥ २१॥

भवेश्वरी भवाराध्या भवेशी भवनायिका ।
भवमाता भवगम्या भवकण्टकनाशिनी ॥ २२॥

भवप्रिया भवानन्दा भवानी भवमोहिनी ।
गायत्री चैव सावित्री ब्रह्माणी ब्रह्मरूपिणी ॥ २३॥

ब्रह्मेशी ब्रह्मदा ब्रह्मा ब्रह्माणी ब्रह्मवादिनी ।
दुर्गस्था दुर्गरूपा च दुर्गा दुर्गार्तिनाशिनी ॥ २४॥

सुगमा दुर्गमा दान्ता दया दोग्ध्री दुरापहा ।
दुरितघ्नी दुराध्यक्षा दुरा दुष्कृतनाशिनी ॥ २५॥

पञ्चास्या पञ्चमी पूर्णा पूर्णपीठनिवासिनी । var पूर्णपीठनिवासिनी २००

सत्त्वस्था सत्त्वरूपा च सत्त्वगा सत्त्वसम्भवा ॥ २६॥

रजस्था च रजोरूपा रजोगुणसमुद्भवा ।
तमस्था च तमोरूपा तामसी तामसप्रिया ॥ २७॥

तमोगुणसमुद्भूता सात्विकी राजसी कला ।
काष्ठा मुहूर्ता निमिषा अनिमेषा ततः परम् ॥ २८॥

अर्धमासा च मासा च संवत्सरस्वरूपिणी ।
योगस्था योगरूपा च कल्पस्था कल्परूपिणी ॥ २९॥

नानारत्नविचित्राङ्गी नानाऽऽभरणमण्डिता ।
विश्वात्मिका विश्वमाता विश्वपाशविनाशिनी ॥ ३०॥

विश्वासकारिणी विश्वा विश्वशक्तिविचारणा ।
जपाकुसुमसङ्काशा दाडिमीकुसुमोपमा ॥ ३१॥

चतुरङ्गी चतुर्बाहुश्चतुराचारवासिनी ।
सर्वेशी सर्वदा सर्वा सर्वदासर्वदायिनी ॥ ३२॥

माहेश्वरी च सर्वाद्या शर्वाणी सर्वमङ्गला ।
नलिनी नन्दिनी नन्दा आनन्दानन्दवर्द्धिनी ॥ ३३॥

व्यापिनी सर्वभुतेषु भवभारविनाशिनी ।
सर्वशृङ्गारवेषाढ्या पाशाङ्कुशकरोद्यता ॥ ३४॥

सूर्यकोटिसहस्राभा चन्द्रकोटिनिभानना ।
गणेशकोटिलावण्या विष्णुकोट्यरिमर्दिनी ॥ ३५॥

दावाग्निकोटिदलिनी रुद्रकोट्युग्ररूपिणी ।
समुद्रकोटिगम्भीरा वायुकोटिमहाबला ॥ ३६॥

आकाशकोटिविस्तारा यमकोटिभयङ्करी ।
मेरुकोटिसमुच्छ्राया गणकोटिसमृद्धिदा ॥ ३७॥

निष्कस्तोका निराधरा निर्गुणा गुणवर्जिता ।
अशोका शोकरहिता तापत्रयविवर्जिता ॥ ३८॥

वसिष्ठा विश्वजननी विश्वाख्या विश्ववर्द्धिनी ।
चित्रा विचित्रा चित्राङ्गी  हेतुगर्भाकुलेश्वरी ॥ ३९॥var विचित्र-चित्राङ्गी
इच्छाशक्तिः ज्ञानशक्तिः क्रियाशक्तिः शुचिस्मिता ।
शुचिः स्मृतिमयी सत्या श्रुतिरूपा श्रुतिप्रिया ॥ ४०॥

महासत्वमयी सत्वा पञ्चतत्त्वोपरिस्थिता ।
पार्वती हिमवत्पुत्री पारस्था पाररूपिणी ॥ ४१॥

जयन्ती भद्रकाली च अहल्या कुलनायिका । varजयन्ती ३००
भूतधात्री च भूतेशी भूतस्था भूतभाविनी ॥ ४२॥

महाकुण्डलिनीशक्तिर्महाविभवर्द्धिनी । var महाकुण्डलिनीशक्तिः महाविभवर्द्धिनी
हंसाक्षी हंसरूपा च हंसस्था हंसरूपिणी ॥ ४३॥

सोमसूर्याग्निमध्यस्था मणिमण्डलवासिनी ।
द्वादशारसरोजस्था सूर्यमण्डलवासिनी ॥ ४४॥

अकलङ्का शशाङ्काभा षोडशारनिवासिनी ।
डाकिनी राकिनी चैव लाकिनी काकिनी तथा ॥ ४५॥

शाकिनी हाकिनी चैव षट् चक्रेषु निवासिनी ।
सृष्टि स्थितिविनाशिनी सृष्ट्यन्ता सृष्टिकारिणी ॥ ४६॥

श्रीकण्ठप्रिया हृतकण्ठा नन्दाख्या विन्दुमालिनी ।
चतुष्षष्टि कलाधारा देहदण्डसमाश्रिता ॥ ४७॥var चतुष्षटि
माया काली धृतिर्मेधा क्षुधा तुष्टिर्महाद्युतिः ।
हिङ्गुला मङ्गला सीता सुषुम्नामध्यगामिनी ॥ ४८॥

परघोरा करालाक्षी विजया जयदायिनी ।
हृतपद्मनिलया भीमा महाभैरवनादिनी ॥ ४९॥

आकाशलिङ्गसम्भूता भुवनोद्यानवासिनी ।
महत्सूक्ष्मा च कङ्काली भीमरूपा महाबला ॥ ५०॥

मेनकागर्भसम्भूता तप्तकाञ्चनसन्निभा ।
अन्तरस्था च कूटबीजा चित्रकूटाचलवासिनी ॥ ५१॥

वर्णाख्या वर्णरहिता पञ्चाशद्वर्णभेदिनी ।

विद्याधरी लोकधात्री अप्सरा अप्सरः प्रिया ॥ ५२॥

दीक्षा दाक्षायणी दक्षा दक्षयज्ञविनाशिनी ।
यशःपूर्णा यशोदा च यशोदागर्भसम्भवा ॥ ५३॥

देवकी देवमाता च राधिका कृष्णवल्लभा ।
अरुन्धती शचीन्द्राणी गान्धारी गन्धमालिनी ॥ ५४॥

ध्यानातीता ध्यानगम्या ध्यानज्ञा ध्यानधारिणी ।
लम्बोदरी च लम्बोष्ठी जाम्बवन्ती जलोदरी ॥ ५५॥

महोदरी मुक्तकेशी मुक्तकामार्थसिद्धिदा ।
तपस्विनी तपोनिष्ठा सुपर्णा धर्मवासिनी ॥ ५६॥ var तपोनिष्ठा ४००
बाणचापधरा धीरा पाञ्चाली पञ्चमप्रिया ।
गुह्याङ्गी च सुभीमाङ्गी गुह्यतत्त्वा निरञ्जना ॥ ५७॥

अशरीरा शरीरस्था संसारार्णवतारिणी ।
अमृता निष्कला भद्रा सकला कृष्णपिङ्गला ॥ ५८॥

चक्रप्रिया च चक्राह्वा पञ्चचक्रादिदिरिणी ।
पद्मरागप्रतीकाशा निर्मलाकाश सन्निभा ॥ ५९॥

अधःस्था ऊर्ध्वरूपा च ऊरध्वपद्मनिवासिनी ।
कार्यकारणकर्तृत्वे शश्वद्-रूपेषु-संस्थिता ॥ ६०॥var शश्वद्रूपेषुसंस्थिता
रसज्ञा रसमध्यस्था गन्धस्था गन्धरूपिणी ।
परब्रह्मस्वरूपा च परब्रह्मनिवासिनी ॥ ६१॥

शब्दब्रह्मस्वरूपा च शब्दस्था शब्दवर्जिता ।
सिद्धिर्बुद्धिर्पराबुद्धिः सन्दीप्तिर्मध्यसंस्थिता ॥ ६२॥var सिद्धिः बुद्धिःपराबुद्धिः
स्वगुह्या शाम्भवीशक्तिः तत्त्वस्था तत्त्वरूपिणी ।
शाश्वती भूतमाता च महाभूताधिपप्रिया ॥ ६३॥

शुचिप्रेता धर्मसिद्धिः धर्मवृद्धिः पराजिता ।
कामसन्दीपनी कामा सदाकौतूहलप्रिया ॥ ६४॥

जटाजूटधरा मुक्ता सूक्ष्मा शक्तिविभूषणा ।
द्वीपिचर्मपरीधाना चीरवल्कलधारिणी ॥ ६५॥

त्रिशूलडमरूधरा नरमालाविभूषणा ।
अत्युग्ररूपिणी चोग्रा कल्पान्तदहनोपमा ॥ ६६॥

त्रैलोक्यसाधिनी साध्या सिद्धिसाधकवत्सला ।
सर्वविद्यामयी सारा चासुराणां विनाशिनी ॥ ६७॥

दमनी दामिनी दान्ता दया दोग्घ्री दुरापहा ।
अग्निजिह्वोपमा घोराघोर घोर तरानना॥ ६८॥var घोराघोर-घोर-तरानना
नारायणी नारसिंही नृसिंहहृदयेस्थिता ।
योगेश्वरी योगरूपा योगमाता च योगिनी ॥ ६९॥

खेचरी खचरी खेला निर्वाणपदसंश्रया ।
नागिनी नागकन्या च सुवेशा नागनायिका ॥ ७०॥

विषज्वालावती दीप्ता कलाशतविभूषणा ।
तीव्रवक्त्रा महावक्त्रा नागकोटित्वधारिणी ॥ ७१॥ ५००
महासत्वा च धर्मज्ञा धर्मातिसुखदायिनी ।
कृष्णमूर्द्धा महामूर्द्धा घोरमूर्द्धा वरानना ॥ ७२॥

सर्वेन्द्रियमनोन्मत्ता सर्वेन्द्रियमनोमयी ।
सर्वसङ्ग्रामजयदा सर्वप्रहरणोद्यता ॥ ७३॥

सर्वपीडोपशमनी सर्वारिष्टनिवारिणी ।
सर्वैश्वर्यसमुत्पन्ना सर्वग्रहविनाशिनी ॥ ७४॥

मातङ्गी मत्तमातङ्गी मातङ्गीप्रियमण्डला ।
अमृतोदधिमध्यस्था कटिसूत्रैरलङ्कृता ॥ ७५॥

अमृतोदधिमध्यस्था प्रवालवसनाम्बुजा ।
मणिमण्डलमध्यस्था ईषत्प्रहसितानना ॥ ७६॥

कुमुदा ललिता लोला लाक्षालोहितलोचना ।
दिग्वासा देवदूती च देवदेवाधिदेवता ॥ ७७॥

सिंहोपरिसमारूढा हिमाचलनिवासिनी ।
अट्टाट्टहासिनी घोरा घोरदैत्यविनाशिनी ॥ ७८॥

अत्यग्ररक्तवस्त्राभा नागकेयूरमण्डिता ।

मुक्ताहारलतोपेता तुङ्गपीनपयोधरा ॥ ७९॥

रक्तोत्पलदलाकारा मदाघूर्णितलोचना ।
समस्तदेवतामूर्तिः सुरारिक्षयकारिणी ॥ ८०॥

खड्गिनी शूलहस्ता च चक्रिणी चक्रमालिनी । repeated खड्गिनी
शङ्खिनी चापिनी बाणा वज्रणी वज्रदण्डिनी ॥ ८१॥var चापिणी वाणा
आन्नदोदधतिमध्यस्था कटिसूत्रधारापरा । var आन्नदोदधिमध्यस्था
नानाभरणदीप्ताङ्गा नानमणिविभूषिता ॥ ८२॥

जगदानन्दसम्भूता चिन्तामणिगुणान्विता ।
त्रैलोक्यनमिता तुर्या चिन्मयानन्दरूपिणी ॥ ८३॥

त्रैलोक्यनन्दिनीदेवी दुःख दुःस्वप्ननाशिनी । var दुःख दुस्वप्ननाशिनी
घोराग्निदाहशमनी राज्यदेवार्थसाधिनी ॥ ८४॥

महाऽपराधराशिघ्नी महाचौरभयापहा ।
रागादि दोषरहिता जरामरणवर्जिता ॥ ८५॥

चन्द्रमण्डलमध्यस्था पीयूषार्णवसम्भवा ।
सर्वदेवैःस्तुतादेवी सर्वसिद्धैर्नमस्कृता ॥ ८६॥

अचिन्त्यशक्तिरूपा च मणिमन्त्रमहौषधि ।
अस्तिस्वस्तिमयीबाला मलयाचलवासिनी ॥ ८७॥

धात्री विधात्री संहारी रतिज्ञा रतिदायिनी ।
रुद्राणी रुद्ररूपा च रुद्ररौद्रार्तिनाशिनी ॥ ८८॥

सर्वज्ञाचैवधर्मज्ञा रसज्ञा दीनवत्सला ।
अनाहता त्रिनयना निर्भारा निर्वृतिःपरा ॥ ८९॥

पराऽघोरा करालाक्षी सुमती श्रेष्ठदायिनी ।
मन्त्रालिका मन्त्रगम्या मन्त्रमाला सुमन्त्रिणी ॥ ९०॥ var मन्त्रगम्या ६००
श्रद्धानन्दा महाभद्रा निर्द्वन्द्वा निर्गुणात्मिका ।
धरिणी धारिणी पृथ्वी धरा धात्री वसुन्धरा ॥ ९१॥

मेरूमन्दरमध्यस्था स्थितिः शङ्करवल्लभा ।
श्रीमती श्रीमयी श्रेष्ठा श्रीकरी भावभाविनी ॥ ९२॥

श्रीदा श्रीमा श्रीनिवासा श्रीवती श्रीमताङ्गतिः ।var श्रीशा
उमा सारङ्गिणी कृष्णा कुटिला कुटिलालिका ॥ ९३॥

त्रिलोचना त्रिलोकात्मा पुण्यापुण्यप्रकीर्तिता पुण्यपुण्याप्रकीर्तिता ।var
पुण्यपुण्याप्रकीर्तिता
अमृता सत्यसङ्कल्पा सा सत्या ग्रन्थिभेदिनी ॥ ९४॥

परेशी परमासाध्या पराविद्या परात्परा ।
सुन्दराङ्गी सुवर्णाभा सुरासुरनमस्कृता ॥ ९५॥

प्रजा प्रजावती धान्या धनधान्यसमृद्धिदा ।
ईशानी भुवनेशानी भवानी भुवनेश्वरी ॥ ९६॥

अनन्तानन्तमहिता जगत्सारा जगद्भवा ।
अचिन्त्यात्माचिन्त्यशक्तिः चिन्त्याचिन्त्यस्वरूपिणी ॥ ९७॥

ज्ञानगम्या ज्ञानमूर्तिः ज्ञानिनी ज्ञानशालिनी ।
असिता घोररूपा च सुधाधारा सुधावहा ॥ ९८॥

भास्करी भास्वरी भीतिर्भास्वदक्षानुशायिनी ।
अनसूया क्षमा लज्जा दुर्लभाभरणात्मिका ॥ ९९॥

विश्वध्नी विश्ववीरा व विश्वाशा विश्वसंस्थिता ।
शीलस्था शीलरूपा च शीला शीलप्रदायिनी ॥ १००॥

बोधिनी बोधकुशला रोधिनीबोधिनी तथा ।
विद्योतिनी विचित्रात्मा विद्युत्पटलसन्निभा ॥ १०१॥

विश्वयोनिर्महायोनिः कर्मयोनिः प्रियात्मिका ।
var?विश्वयोनिः महायोनिः कर्मयोनिः प्रियात्मिका
रोहिणी रोगशमनी महारोगज्वरापहा ॥ १०२॥

रसदा पुष्टिदा पुष्टिर्मानदा मानवप्रिया । var पुष्टिः मानदा
कृष्णाङ्गवाहिनी कृष्णाऽकला कृष्णसहोदरा ॥ १०३॥ var कृषणाऽकला ६९९ ७००
शाम्भवी शम्भुरूपा च शम्भुस्था शम्भुसम्भवा ।
विश्वोदरी योगमाता योगमुद्रा सुयोगिनी ॥ १०४॥

वागीश्वरी योगनिद्रा योगिनीकोटिसेविता ।
कौलिका नन्दकन्या च शृङ्गारपीठवासिनी ॥ १०५॥

क्षेमङ्करी सर्वरूपा दिव्यरूपा दिगम्बरी ।
धूम्रवक्त्रा धूम्रनेत्रा धूम्रकेशी च धूसरा ॥ १०६॥

पिनाकी रुद्रवेताली महावेतालरूपिणी ।
तपिनी तापिनी दीक्षा विष्णुविद्यात्मनाश्रिता ॥ १०७॥

मन्थरा जठरा तीव्राऽग्निजिह्वा च भयापहा ।
पशुघ्नी पशुपाला च पशुहा पशुवाहिनी ॥ १०८॥

पितामाता च धीरा च पशुपाशविनाशिनी ।
चन्द्रप्रभा चन्द्ररेखा चन्द्रकान्तिविभूषिणी ॥ १०९॥

कुङ्कमाङ्कितसर्वाङ्गी सुधासद्गुरुलोचना ।
शुक्लाम्बरधरादेवी वीणापुस्तकधारिणी ॥ ११०॥

ऐरावतपद्मधरा श्वेतपद्मासनस्थिता ।
रक्ताम्बरधरादेवी रक्तपद्मविलोचना ॥ १११॥

दुस्तरा तारिणी तारा तरुणीताररूपिणी ।
सुधाधारा च धर्मज्ञा धर्मसङ्घोपदेशिनी ॥ ११२॥

भगेश्वरी भगाराध्या भगिनी भगनायिका ।
भगबिम्बा भगक्लिन्ना भगयोनिर्भगप्रदा ॥ ११३॥var भगयोनिः भगप्रदा
भगेशी भगरूपा च भगगुह्या भगावहा ।
भगोदरी भगानन्दा भगस्था भगशालिनी ॥ ११४॥

सर्वसङ्क्षोभिणीशक्तिः सर्वविद्राविणी तथा ।
मालिनी माधवी माध्वी मधुरूपा महोत्कटा ॥ ११५॥

भेरुण्डा चन्द्रिका ज्योत्स्ना विश्वचक्षुस्तमोऽपहा ।var विश्वचक्षुस्तमोपहा
सुप्रसन्ना महादूती यमदूती भयङ्करी ॥ ११६॥

उन्मादिनी महारूपा दिव्यरूपा सुरार्चिता ।
चैतन्यरूपिणी नित्या क्लिन्ना काममदोद्धता ॥ ११७॥

मदिरानन्दकैवल्या मदिराक्षी मदालसा । var मदिराक्षी ८००
सिद्धेश्वरी सिद्धविद्या सिद्धाद्या सिद्धसम्भवा ॥ ११८॥

सिद्धर्द्धिः सिद्धमाता च सिद्धःसर्वार्थसिद्धिदा ।
मनोमयी गुणातीता परञ्ज्योतिःस्वरूपिणी ॥ ११९॥

परेशी परगापारा परासिद्धिः परागतिः ।
विमला मोहिनी आद्या मधुपानपरायणा ॥ १२०॥

वेदवेदाङ्गजननी सर्वशास्त्रविशारदा ।
सर्वदेवमयीविद्या सर्वशास्त्रमयी तथा ॥ १२१॥

सर्वज्ञानमयीदेवी सर्वधर्ममयीश्वरी ।
सर्वयज्ञमयी यज्ञा सर्वमन्त्राधिकारिणी ॥ १२२॥

सर्वसम्पतप्रतिष्ठात्री सर्वविद्राविणी परा ।
सर्वसङ्क्षोभिणीदेवी सर्वमङ्गलकारिणी ॥ १२३॥

त्रैलोक्याकर्षिणी देवी सर्वाह्लादनकारिणी ।
सर्वसम्मोहिनीदेवी सर्वस्तम्भनकारिणी॥ १२४॥

त्रैलोक्यजृम्भिणी देवी तथा सर्ववशङ्करी ।
त्रैलोक्यरञ्जनीदेवी सर्वसम्पत्तिदायिनी ॥ १२५॥

सर्वमन्त्रमयिदेवी सर्वद्वन्द्वक्षयङ्करी ।
सर्वसिद्धिप्रदादेवी सर्वसम्पत्प्रदायिनी ॥ १२६॥

सर्वप्रियङ्करीदेवी सर्वमङ्गलकारिणी ।
सर्वकामप्रदादेवी सर्वदुःखविमोचिनी ॥ १२७॥

सर्वमृत्युप्रशमनी सर्वविघ्नविनाशिनी ।
सर्वाङ्गसुन्दरीमाता सर्वसौभाग्यदायिनी ॥ १२८॥

सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यफलप्रदा ।
सर्वज्ञानमयीदेवी सर्वव्याधिविनाशिनी ॥ १२९॥

सर्वाधारस्वरूपा च सर्वपापहरा तथा ।
सर्वानन्दमयीदेवी सर्वेच्छायाःस्वरूपिणी ॥ १३०॥

सर्वलक्ष्मीमयीविद्या सर्वेप्सितफलप्रदा ।
सर्वारिष्टप्रशमनी परमानन्ददायिनी ॥ १३१॥

त्रिकोणनिलया त्रिस्था त्रिमाता त्रितनुस्थिता।
त्रिवेणी त्रिपथा गुण्या त्रिमूर्तिः त्रिपुरेश्वरी ॥ १३२॥

त्रिधाम्नी त्रिदशाध्यक्षा त्रिवित्त्रिपुरवासिनी ।
त्रयीविद्या च त्रिशिरा त्रैलोक्या च त्रिपुष्करा ॥ १३३॥

त्रिकोटरस्था त्रिविधा त्रिपुरा त्रिपुरात्मिका ।
त्रिपुराश्री त्रिजननी त्रिपुरात्रिपुरसुन्दरी ॥ १३४॥

महामाया महामेधा महाचक्षुः महोक्षजा ।
महावेधा पराशक्तिः पराप्रज्ञा परम्परा ॥ १३५॥

महालक्ष्या महाभक्ष्या महाकक्ष्याऽकलेश्वरी । var महाकक्ष्याऽकलेश्वरी ९०० ९०१
कलेश्वरी कलानन्दा कलेशी कलसुन्दरी ॥ १३६॥

कलशा कलशेशी च कुम्भमुद्रा कृशोदरी ।varकृषोदरी
कुम्भपा कुम्भमध्येशी कुम्भानन्दप्रदायिनी॥ १३७॥

कुम्भजानन्दनाथा व कुम्भजानन्दवर्द्धिनी ।
कुम्भजानन्दसन्तोषा कुम्भजतर्पिणीमुदा ॥ १३८॥

वृत्तिः वृत्तीश्वरीऽमोघा विश्ववृत्त्यन्ततर्पिणी।
विश्वशान्ति विशालाक्षी मीनाक्षी मीनवर्णदा ॥ १३९॥

विश्वाक्षी दुर्धरा धूमा इन्द्राक्षी विष्णुसेविता ।
विरञ्चिसेविता विश्वा ईशाना ईशवन्दिता ॥ १४०॥

महाशोभा महालोभा महामोहा महेश्वरी ।
महाभीमा महाक्रोधा मन्मथा मदनेश्वरी ॥ १४१॥

महानला महाक्रोधा विश्वसंहारताण्डवा । repeated महाक्रोधा
सर्वसंहारवर्णेशी सर्वपालनतत्परा ॥ १४२॥

सर्वादिः सृष्टिकर्त्री च शिवाद्या शम्भुस्वामिनी ।

महानन्देश्वरी मृत्युर्महास्पन्देश्वरी सुधा ॥ १४३॥var मृत्युः महास्पन्देश्वरी
पर्णापर्ण परावर्णाऽपर्णेशी पर्णमानसा ।
वराही तुण्डदा तुण्डा गणेशी गणनायिका ॥ १४४॥

वटुका वटुकेशी च क्रौचदारणजन्मदा ।
क ए इ ल महामाया ह स क ह ल मायया ॥ १४५॥

दिवयानामा सदाकामा श्यामा रामा रमा रसा ।
स क ल ह्रीं तत्स्वरूपा च।श्रीं ह्रीं नामादि रूपिणी ॥ १४६॥

कालज्ञा कालहामूर्तिः सर्वसौभाग्यदा मुदा ।
उर्वा उर्वेश्वरी खर्वा खर्वपर्वा खगेश्वरी ॥ १४७॥

गरुडा गारुडीमाता गरुडेश्वरपूजिता ।
अन्तरिक्षान्तरपदा प्रज्ञा प्रज्ञानदा परा ॥ १४८॥

विज्ञाना विश्वविज्ञाना अन्तराक्षा विशारदा ।
अन्तर्ज्ञानमयी सौम्या मोक्षानन्दविवर्द्धिनी ॥ १४९॥

शिवशक्तिमयीशक्तिः एकानन्दप्रवर्तिनी ।
श्रीमाता श्रीपराविद्या सिद्धाश्री सिद्धसागरा ।
सिद्धलक्ष्मी सिद्धविद्या सिद्धा सिद्धेश्वरी सुधा ॥ १५०॥ var सुधा १००९

॥ फलश्रुतिः ॥

इदं त्रिपुरासुन्दर्याः स्तोत्रनामसहस्रकम् ।
गुह्याद्गुह्यतरं पुत्र! तव प्रीत्यै प्रकीर्तितम् ॥ १॥

गोपनीयं प्रयत्नेन पठनीयं प्रयत्नतः ।
नातः परतरं पुण्यं नातःपरतरं तपः ॥ २॥

नातः परतरं स्तोत्रं नातः परतरं गतिः ।
स्तोत्रं सहस्रनामाख्यं मम वक्त्राद्विनिर्गतम् ॥ ३॥

यः पठेत्प्रयतो भक्त्या शृणुयाद्वा समाहितः ।
मोक्षार्थी लभते मोक्षं स्वर्गार्थी स्वर्गमाप्नुयात् ॥ ४॥

कामांश्च प्राप्नुयातकामी धनार्थी च लभेद्धनम् ।

विद्यार्थी लभते विद्यां यशोऽर्थी लभते यशः ॥ ५॥

कन्यार्थी लभते कन्यां सुतार्थी लभते सुतम् ।
गुर्विणी जनयेत्पुत्रं कन्या विन्दति सत्पतिम् ॥ ६॥

मूर्खोऽपि लभते शास्त्रं हीनोऽपि लभते गतिम् ।
सङ्क्रान्त्यां वार्कामावस्यां अष्टम्यां च विशेषतः ॥ ७॥

पौर्णमास्यां चतुर्दश्यां नवम्यां भौमवासरे ।
पठेद्वा पाठयेद्वापि शृणुयाद्वा समाहितः ॥ ८॥var शृणुयाद् वा समाहितः
स मुक्तो सर्वपापेभ्यः कामेश्वरसमो भवेत् ।
लक्ष्मीवान् धर्मवांश्चैव वल्लभस्सर्वयोषिताम् ॥ ९॥

तस्य वश्यं भवेदाशु त्रैलोक्यं सचराचरम् ।
रुद्रं दृष्टवा यथा देवा विष्णुं दृष्ट्वा च दानवाः ॥ १०॥varदृष्टा
यथाहिर्गरुडं दृष्ट्वा सिंह दृष्ट्वा यथा गजाः ।
कीटवत्प्रपलायन्ते तस्य वक्त्रावलोकनात् ॥ ११॥

अग्निचौरभयं तस्य कदाचिन्नैव सम्भवेत् ।
पातका विविधाः शन्तिर्मेरुपर्वतसन्निभाः ॥ १२॥

यस्मात्तच्छृणुयाद्विघ्नांस्तृणं वह्निहुतं यथा ।
एकदा पठनादेव सर्वपापक्षयो भवेत् ॥ १३॥

दशधा पठनादेव वाचा सिद्धः प्रजायते ।
शतधा पठनाद्वापि खेचरो जायते नरः ॥ १४॥

सहस्रदशसङ्ख्यातं यः पठेद्भक्तिमानसः ।
माताऽस्य जगतां धात्री प्रत्यक्षा भवति ध्रुवम् ॥ १५॥

लक्षपूर्णे यथा पुत्र! स्तोत्रराजं पठेत्सुधीः ।
भवपाशविनिर्मुक्तो मम तुल्यो न संशयः ॥ १६॥

सर्वतीर्थेषु यत्पुण्यं सकृज्जप्त्वा लभेन्नरः ।
सर्ववेदेषु यत्प्रोक्तं तत्फलं परिकीर्तितम् ॥ १७॥
भूत्वा च बलवान पुत्र धनवान्सर्वसम्पदः ।
देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम् ॥ १८॥

स यास्यति न सन्देहः स्तवराजस्य किर्त्तनात् ॥ १९॥

॥ इति श्रीवामकेश्वरतन्त्रे षोडश्याः सहस्रनामस्तोत्रं सम्पूर्णम् ॥